# चम्पूरामायणे

# बालकाण्डम्

११ – २२.०१.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

# पुनरावर्तनम्

- अस्ति प्रशस्तविभवैः – लङ्कायाः वर्णनम्
- एनां पुराणनगरीम् – लङ्कायाः राजा रावणः, तस्य वर्णनारम्भः
- यद्बाहुराहु – रावणस्य पराक्रमेण निरस्ताः दिक्पालकाः, वैरिणश्च यमलोकं प्राप्ताः

अम्भोजसम्भवममुं बहुभिस्तपोभिः
आराधयन् वरमवाप परैर्दुरापम् ।
तस्मादशेषभुवनं निजशासनस्य
लक्ष्यीकरोति रजनीचरचक्रवर्ती ॥ २१ ॥

- ब्रह्मणः वरेण रावणस्य दौर्जन्यम्
- अम्भोज-सम्भवम्, अमुम्, बहुभिः, तपोभिः, आराधयन्, वरम्, अवाप, परैः, दुरापम् । तस्मात्, अशेष-भुवनम्, निज-शासनस्य, लक्ष्यीकरोति, रजनी-चर-चक्रवर्ती

अम्भोजसम्भवममुं बहुभिस्तपोभिः आराधयन् वरमवाप परैर्दुरापम् ।
तस्मादशेषभुवनं निजशासनस्य लक्ष्यीकरोति रजनीचरचक्रवर्ती ॥२१॥

- अवाप = प्राप्नोत्
- कः अवाप? रजनीचरचक्रवर्ती = राक्षससार्वभौमः रावणः
- किम् अवाप? वरम् = नरवानरौ अन्तरेण अन्यैः अवध्यत्वरूपं वरम्
- कीदृशं वरम्? परैः = अन्यैः, दुरापम् = लब्धुमशक्यम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

अम्भोजसम्भवममुं बहुभिस्तपोभिः आराधयन् वरमवाप परैर्दुरापम् ।
तस्माद्शेषभुवनं निजशासनस्य लक्ष्यीकरोति रजनीचरचक्रवर्ती ॥२१॥

- कथम् अवाप? आराधयन् = पूजयन्
- कम् आराधयन्? अमुम् = एतम् (पुरःस्थितम्), अम्भोजसम्भवम् = कमलभुवं ब्रह्माणम्
- केन आराधयन्? बहुभिः = अनेकैः, तपोभिः = उग्रतपश्चर्याभिः

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

अम्भोजसम्भवममुं बहुभिस्तपोभिः आराधयन् वरमवाप परैर्दुरापम् ।
तस्मादशेषभुवनं निजशासनस्य लक्ष्यीकरोति रजनीचरचक्रवर्ती ॥२१॥

- तस्मात् = तेन कारणेन
- लक्ष्यीकरोति = विषयीकरोति
- किं लक्ष्यीकरोति? अशेषभुवनम् – अशेषम् = निखिलम्, भुवनम् = प्रपञ्चम्
- कस्य लक्ष्यीकरोति? निजशासनस्य = स्वस्य आज्ञायाः

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# अम्भोजसम्भवममुं बहुभिस्तपोभिः आराधयन् वरमवाप परैर्दुरापम् ।
# तस्मादशेषभुवनं निजशासनस्य लक्ष्यीकरोति रजनीचरचक्रवर्ती ॥२१॥

- अन्वयः – रजनीचरचक्रवर्ती अमुम् अम्भोजसम्भवं बहुभिः तपोभिः आराधयन् परैः दुरापं वरम् अवाप । तस्माद् अशेषभुवनं निजशासनस्य लक्ष्यीकरोति ।
- तात्पर्य्यम् – राक्षससार्वभौमो रावणः उग्रतपसा ब्रह्माणं प्रसाद्य अन्यैः प्राप्तुं दुःशकम् अवध्यत्वरूपं वरं प्राप्तवान् । तेन वरेण दृप्तः सर्वान् लोकान् स्वाधीनान् करोति ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

अम्भोजसम्भवममुं बहुभिस्तपोभिः आराधयन् वरमवाप परैर्दुरापम् ।
तस्मादशेषभुवनं निजशासनस्य लक्ष्यीकरोति रजनीचरचक्रवर्ती ॥२१॥

- भगवन् त्वत्प्रसादेन रावणो नाम राक्षसः ।
- सर्वान् नो बाधते वीर्यात् शासितुं तं न शक्नुमः ॥ (बाल० १५.६)
- उद्वेजयति लोकान् त्रीन् उच्छ्रितान् द्वेष्टि दुर्मतिः ।
- शक्रं त्रिदशराजानं प्रधर्षयितुमिच्छति ॥ (बाल० १५.८)

अम्भोजसम्भवममुं बहुभिस्तपोभिः आराधयन् वरमवाप परैर्दुरापम् ।
तस्मादशेषभुवनं निजशासनस्य लक्ष्यीकरोति रजनीचरचक्रवर्ती ॥२१॥

- अम्भोजसम्भवम् – अम्भोजे सम्भवः यस्य सः, तम् ।
- तपोभिः – सकारान्तः, नपुं, ३.३
- आराधयन् – आ+ "राध संसिद्धौ" + णिच् + शतृ (कृत्) – तकारान्तः, पुं, १.१

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

अम्भोजसम्भवममुं बहुभिस्तपोभिः आराधयन् वरमवाप परैर्दुरापम् ।
तस्मादशेषभुवनं निजशासनस्य लक्ष्यीकरोति रजनीचरचक्रवर्ती ॥२१॥

- अवाप – "आप्लृ व्याप्तौ" – लिट्, प्रथम.१
- दुरापम् – दुःखेन आप्तुं शक्यम् – दुस् + आप् + खल् (ईषद्-दुः-सुषु कृच्छ्र-अकृच्छ्रार्थेषु खल्)
- अशेषभुवनम् – नास्ति शेषः यस्य, अशेषं भुवनम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

अम्भोजसम्भवममुं बहुभिस्तपोभिः आराधयन् वरमवाप परैर्दुरापम् ।
तस्मादशेषभुवनं निजशासनस्य लक्ष्यीकरोति रजनीचरचक्रवर्ती ॥२१॥

- लक्ष्यीकरोति – अलक्ष्यं लक्ष्यं करोति – अभूततद्भावे च्विः (कृत्)
- रजनीचरचक्रवर्ती – नकारान्तः पुं, १.१ । रजन्यां चरन्ति, रजनीचराणां चक्रवर्ती ।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam - Value Education - Technology

# तेन वयं पराधीना इव भवामः ।

- तेन, वयम्, पराधीनाः, इव, भवामः ।
- तेन = रावणेन
- वयम् = देवाः
- पराधीनाः इव = परतन्त्राः इव
- भवामः = वर्तामहे

# तेन वयं पराधीना इव भवामः ।

- तात्पर्यम् - रावणस्य पराक्रमेण भीताः वयं तदाज्ञावर्तिनः, तदधीना इव स्मः। वस्तुतस्तु भवत्परतन्त्रा एव वयमिति ध्वनिः ।
- नैनं सूर्यं प्रतपति पार्श्वे वाति न मारुतः ।
- चलोर्मिमाली तं दृष्ट्वा समुद्रोऽपि न कम्पते ॥ (बाल० १५.१०)

सोऽयं कदाचित् क्रीडाधराधरमारुह्य सावरोधवधूजनश्चरणाभ्यां सञ्चरेत चेदागमिष्यत्याग इत्यनाविष्कृतातपो भयेन भगवान् सहस्रभानुरपि सङ्कुचितभानुरेव तत्सानूनि नूनं संश्रयते ।

- सः, अयम्, कदाचित्, क्रीडा-धराधरम्, आरुह्य, स-अवरोध-वधू-जनः, चरणाभ्याम्, सञ्चरेत, चेत्, आगमिष्यति, आगः, इति, अनाविष्कृत-आतपः, भयेन, भगवान्, सहस्र-भानुः, अपि, सङ्कुचित-भानुः, एव, तत्-सानूनि, नूनम्, संश्रयते

सोऽयं कदाचित् क्रीडाधराधरमारुह्य सावरोधवधूजनश्चरणाभ्यां सञ्चरेत चेदागमिष्यत्याग इत्यनाविष्कृतातपो भयेन भगवान् सहस्रभानुरपि सङ्कुचितभानुरेव तत्सानूनि नूनं संश्रयते ।

- सोऽयम् = रावणः
- कदाचित् = कस्मिंश्चित् समये
- क्रीडाधराधरम् = लीलापर्वतम्
- आरुह्य = अधिरुह्य

सोऽयं कदाचित् क्रीडाधराधरमारुह्य सावरोधवधूजनश्चरणाभ्यां सञ्चरेत चेदागमिष्यत्याग इत्यनाविष्कृतातपो भयेन भगवान् सहस्रभानुरपि सङ्कुचितभानुरेव तत्सानूनि नूनं संश्रयते ।

- सावरोधवधूजनः = अन्तःपुरस्त्रीभिः सहितः
- चरणाभ्याम् = पादाभ्याम्
- सञ्चरेत चेत् = विहरेत् यदि
- आगः = अपराधः

सोऽयं कदाचित् क्रीडाधराधरमारुह्य सावरोधवधूजनश्चरणाभ्यां सञ्चरेत चेदागमिष्यत्याग इत्यनाविष्कृतातपो भयेन भगवान् सहस्रभानुरपि सङ्कुचितभानुरेव तत्सानूनि नूनं संश्रयते ।

- आगमिष्यति = सम्भविष्यति
- इति = इति मत्वा
- भयेन = भीत्या
- अनाविष्कृतातपः = अप्रकटित-द्योतः

सोऽयं कदाचित् क्रीडाधराधरमारुह्य सावरोधवधूजनश्चरणाभ्यां सञ्चरेत चेदागमिष्यत्याग इत्यनाविष्कृतातपो भयेन भगवान् सहस्रभानुरपि सङ्कुचितभानुरेव तत्सानूनि नूनं संश्रयते ।

- भगवान् = पूज्यः
- सहस्रभानुः = सूर्यः
- अपि
- सङ्कुचितभानुः = उपसंहृतमरीचिः

सोऽयं कदाचित् क्रीडाधराधरमारुह्य सावरोधवधूजनश्चरणाभ्यां सञ्चरेत चेदागमिष्यत्याग इत्यनाविष्कृतातपो भयेन भगवान् सहस्रभानुरपि सङ्कुचितभानुरेव तत्सानूनि नूनं संश्रयते ।

- एव
- तत्सानूनि = क्रीडापर्वतस्य प्रस्थान् (अधःप्रदेशान्)
- नूनम् = निश्चयेन
- संश्रयते = आश्रयति

सोऽयं कदाचित् क्रीडाधराधरमारुह्य सावरोधवधूजनश्चरणाभ्यां सञ्चरेत चेदागमिष्यत्याग इत्यनाविष्कृतातपो भयेन भगवान् सहस्रभानुरपि सङ्कुचितभानुरेव तत्सानूनि नूनं संश्रयते ।

- तात्पर्यम् – यदा रावणः अन्तःपुरस्त्रीभिः सह क्रीडपर्वतम् आरुह्य पद्भ्यां विहरति, तदा तस्य कोपभयेन सूर्यः स्वस्य आतपं संहृत्य सङ्कुचितकिरणः पर्वतस्य अधोभागम् आश्रयति ।
- रावणस्य विहारकाले दण्डभीत्या जगत्प्रकाशकोऽपि सूर्यः निलीय आत्मनः प्रकाशं संहरति इत्यर्थः ।

सोऽयं कदाचित् क्रीडाधराधरमारुह्य सावरोधवधूजनश्चरणाभ्यां सञ्चरेत चेदागमिष्यत्याग इत्यनाविष्कृतातपो भयेन भगवान् सहस्रभानुरपि सङ्कुचितभानुरेव तत्सानूनि नूनं संश्रयते ।

- सावरोधवधूजनः – अवरोधस्य वध्वः, अवरोधवध्वः एव जनः, अवरोधवधूजनेन सह ।
- आगः – "आगोऽपराधो मन्तुश्च" (अमरः)
- अनाविष्कृतातपः – न आविष्कृतः । अनाविष्कृतः आतपः येन सः । "प्रकाशो द्योत आतपः" (अमरः)

सोऽयं कदाचित् क्रीडाधराधरमारुह्य सावरोधवधूजनश्चरणाभ्यां सञ्चरेत चेदागमिष्यत्याग इत्यनाविष्कृतातपो भयेन भगवान् सहस्रभानुरपि सङ्कुचितभानुरेव तत्सानूनि नूनं संश्रयते ।

- सहस्रभानुः – सहस्रं भानवः यस्य सः । “भानुर्हंसः सहस्रांशुः तपनः सविता रविः” (अमरः)
- सङ्कुचितभानुः – सङ्कुचिताः भानवः यस्य सः । “भानुः करो मरीचिः” (अमरः)
- अनुप्रासः, अतिशयोक्तिः ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# सङ्क्षेपः

- अम्भोजसम्भवममुम् – रावणः ब्रह्मणः वरेण उन्मत्तः त्रैलोक्यं स्ववशं करोति
- तेन वयं पराधीना इव भवामः – देवानां दुःस्थितिः
- सोऽयं कदाचित् – रावणविहारसमये भीतः सूर्यः आतपं संहृत्य तस्मात् निलीयते






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in